महत्पापमकार्षं हि यास्यामि निरयं ध्रुवम् २४
कमुपायं हरे कुर्यां दासोऽहं ते तमादिश
येन पापकुलं नश्येन्निरयो न भवेन्मम २५
इत्युक्त्वा स पुनर्विष्णोः पादयोर्मुनिसत्तमः
पपात सुमतिर्भक्त्या पश्चात्तापमुपागतः २६
अथ विष्णुस्तमुत्थाप्य बभाषे सूनृतं वचः
विष्णुरुवाच
न खेदं कुरु मे भक्त वरस्त्वं नात्र संशयः २७
शृणु तात प्रवक्ष्यामि सुहितं तव निश्चयात्
निरयस्ते न भविता शिवश्शं ते विधास्यति २८
यदकार्षीश्शिववचो वितथं मदमोहितः
स दत्तवानीदृशं ते फलं कर्म फलप्रदः २९
शिवेच्छाऽखिलं जातं कुर्वित्थं निश्चितां मतिम्
गर्वापहर्ता स स्वामी शंकरः परमेश्वरः ३०
परं ब्रह्म परात्मा स सच्चिदानंदबोधनः
निर्गुणो निर्विकारो च रजस्सत्वतमः पर ३१
स एवमादाय मायां स्वां त्रिधा भवति रूपतः
ब्रह्मविष्णुमहेशात्मानिर्गुणोऽनिर्गुणोऽपि सः ३२
निर्गुणत्वे शिवाह्वो हि परमात्मा महेश्वरः
परं ब्रह्माव्ययोऽनंतो महादेवेति गीयते ३३
तत्सेवया विधिस्स्रष्टा पालको जगतामहम्
स्वयं सर्वस्य संहारी रुद्ररूपेण सर्वदा ३४
साक्षी शिवस्वरूपेण मायाभिन्नस्स निर्गुणः
स्वेच्छाचारी संविहारी भक्तानुग्रहकारकः ३५
शृणु त्वं नारद मुने सदुपायं सुखप्रदम्

सर्वपापापहर्त्तारं भुक्तिमुक्तिप्रदं सदा ३६
त्युक्त्वा स्त्वसंशयं सर्वं शंकरसद्यशः
शतनामशिवस्तोत्रं सदानन्यमतिर्जप ३७
यज्ञपित्वा द्रुतं सर्वं तव पापं विनश्यति
इत्युक्त्वा नारदं विष्णुः पुनः प्राह दयान्वितः ३८
मुने न कुरु शोकं त्वं त्वया किंचित्कृतं नहि
स्वेच्छया कृतवान्शंभुरिदं सर्वं न संशयः ३९
अहार्षित्त्वन्मतिं दिव्यां काम क्लेशमदात्स ते
त्वन्मुखाद्दापयांचक्रे शापं मे स महेश्वरः ४०
इत्थं स्वचरितं लोके प्रकटीकृतवान् स्वयम्
मृत्युंजयः कालकालो भक्तोद्धारपरायणः ४१
न मे शिवसमानोस्ति प्रियः स्वामी सुखप्रदः
सर्वशक्तिप्रदो मेऽस्ति स एव परमेश्वरः ४२
तस्योपास्यां कुरु मुने तमेव सततं भज
तद्यशः शृणु गाय त्वं कुरु नित्यं तदर्चनम् ४३
कायेन मनसा वाचा यश्शंकरमुपैति भो
स पण्डित इति ज्ञेयस्स जीवन्मुक्त उच्यते ४४
शिवेति नामदावाग्नेर्महापातकपर्वताः
भस्मीभवन्त्यनायासात्सत्यं सत्यं न संशयः ४५
पापमूलानि दुःखानि विविधान्यपि तान्यतः
शिवार्चनैकनश्यानि नान्य नश्यानि सर्वथा ४६
स वैदिकस्स पुण्यात्मा स धन्यस्स बुधो मुने
यस्सदा कायवाक्चित्तैश्शरणं याति शंकरम् ४७
भवंति विविधा धर्मा येषां सद्यः फलोन्मुखाः
तेषां भवति विश्वासस्त्रिपुरांतकपूजने ४८

पातकानि विनश्यंति यावंति शिवपूजया
भुवि तावंति पापानि न संत्येव महामुने ४९
ब्रह्महत्यादिपापानां राशयोप्यमिता मुने
शिवस्मृत्या विनश्यंति सत्यं सत्यं वदाम्यहम् ५०
शिवनामतरीं प्राप्य संसाराब्धिं तरंति ते
संसारमूलपापानि तस्य नश्यंत्यसंशयम् ५१
संसारमूलभूतनां पातकानां महामुने
शिवनामकुठारेण विनाशो जायते ध्रुवम् ५२
शिवनामामृतं पेयं पापदावानलार्दितैः
पापदावाग्नितप्तानां शांतिस्तेन विना न हि ५३
शिवेति नामपीयूषवर्षधारापरिप्लुतः
संसारदवमध्यपि न शोचति न संशयः ५४
न भक्तिश्शंकरे पुंसां रागद्वेषरतात्मनाम्
तद्विधानां हि सहसा मुक्तिर्भवति सर्वथा ५५
अनंतजन्मभिर्येन तपस्तप्तं भविष्यति
तस्यैवभक्तिर्भवति भवानी प्राणवल्लभे ५६
जातापि शंकरे भक्तिरन्यसाधारणी वृथा
परंत्वव्यभिचारेणशिवभक्तिरपेक्षिता ५७
यस्यासाधारणीशंभौ भक्तिरव्यभिचारिणी
तस्यैवमोक्षस्सुलभोनास्येतिन्य मतिर्मम ५८
कृत्वाप्यनंतपापानियदि भक्तिर्महेश्वरे
सर्वपापविनिर्मुक्तो भवत्येव न संशयः ५९
भवंति भस्मसाद्वृक्षादवदग्धा यथावने
तथा भवन्ति दग्धानि शांकराणामघान्यपि ६०
योनित्यं भस्मपूतांगो शिवपूजोन्मुखो भवेत्

स तरत्येव संसारमपारमतिदारुणम्  ६१
ब्रह्मस्वहरणं कृत्वा हत्वापि ब्राह्मणान्बहून्
लिप्यते नरः पापैर्विरूपाक्षस्य सेवकः  ६२
विलोक्य वेदानखिलाञ्छिवस्यैवार्चनम्परम्
संसारनाशनोपाय इति पूर्वैर्विनिश्चितम्  ६३
अद्यप्रभृति यत्नेन सावधानो यथाविधि
साम्बं सदाशिवं भक्त्या भज नित्यं महेश्वरम्  ६४
आपादमस्तकं सम्यक् भस्मनोद्धूल्य सादरम्
सर्वश्रुतिश्रुतं शैवम्मंत्रञ्जप षडक्षरम्  ६५
सर्वाङ्गेषु प्रयत्नेन रुद्राक्षाञ्छिववल्लभान्
धारयस्वातिसद्भक्त्या समन्त्रम्विधिपूर्वकम्  ६६
शृणु शैवीं कथां नित्यं वद शैवीं कथां सदा
पूजयस्वातियत्नेन शिवभक्तान्पुनः पुनः  ६७
अप्रमादेन सततं शिवैकशरणो भव
शिवार्चनेन सततमानन्दः प्राप्यते यतः  ६८
उरस्याधाय विशदे शिवस्य चरणाम्बुजौ
शिवतीर्थानि विचर प्रथमं मुनिसत्तम  ६९
पश्यन्माहात्म्यमतुलं शंकरस्य परात्मनः
गच्छानन्दवनं पश्चाच्छंभुप्रियतमं मुने  ७०
तत्र विश्वेश्वरं दृष्ट्वा पूजनं कुरु भक्तितः
नत्वा स्तुत्वा विशेषेण निर्विकल्पो भविष्यसि  ७१
ततश्च भवता नूनं विधेयं गमनं मुने
ब्रह्मलोके स्वकामार्थं शासनान्मम भक्तितः  ७२
नत्वा स्तुत्वा विशेषेण विधिं स्वजनकं मुने
प्रष्टव्यं शिवमाहात्म्यं बहुशः प्रीतचेतसा  ७३

स शैवप्रवरो ब्रह्मा माहात्म्यं शंकरस्य ते
श्रावयिष्यति सुप्रीत्या शतनामस्तवं च हि ७४
अद्यतस्त्वं भव मुने शैवश्शिवपरायणः
मुक्तिं भागी विशेषेण शिवस्ते शंविधास्यति ७५
इत्थं विष्णुर्मुनिं प्रीत्या ह्युपदिश्य प्रसन्नधीः
स्मृत्वा नुत्वा शिवं स्तुत्वा ततस्त्वंतरधीयत ७६
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे
सृष्ट्युपाख्याने नारदस्य विष्णूपदेशवर्णनो नाम चतुर्थोऽध्यायः ४

सूत उवाच
अंतर्हिते हरौ विप्रा नारदो मुनिसत्तमः
विचचार महीं पश्यञ्छिवलिंगानि भक्तितः १
पृथिव्या अटनं कृत्वा शिवरूपाण्यनेकशः
ददर्श प्रीतितो विप्रा भुक्तिमुक्तिप्रदानि सः २
अथ तं विचरंतं कौ नारदं दिव्यदर्शनम्
ज्ञात्वा शंभुगणौ तौ तु सुचित्तमुपजग्मतुः ३
शिरसा सुप्रणम्याशु गणावूचतुरादरात्
गृहीत्वा चरणौ तस्य शापोद्धारेच्छया चतौ ४
शिवगणावूचतुः
ब्रह्मपुत्र सुरर्षे हि शृणु प्रीत्यावयोर्वचः
तवापराधकर्तारावावां विप्रौ न वस्तुतः ५
आवां हरगणौ विप्र तवागस्कारिणौ मुने
स्वयम्वरे राजपुत्र्या मायामोहितचेतसा ६
त्वया दत्तश्च नौ शापः परेशप्रेरितेन ह
ज्ञात्वा कुसमयं तत्र मौनमेव हि जीवनम् ७

स्वकर्मणः फलं प्राप्तं कस्यापि न हि दूषणम्
सुप्रसन्नो भव विभो कुर्वनुग्रहमद्यनौ ८
सूत उवाच
वच आकर्ण्य गणयोरिति भक्त्युक्तमादरात्
प्रत्युवाच मुनिः प्रीत्या पश्चात्तापमवाप्य सः ९
नारद उवाच
शृणुतं मे महादेव गणौ मान्यतमौ सताम्
वचनं सुखदं मोहनिर्मुक्तं च यथार्थकम् १०
पुरा मम मतिर्भ्रष्टा सीच्छिवेच्छावशात् ध्रुवम्
सर्वथा मोहमापन्नश्शप्तवान्वां कुशेमुषिः ११
यदुक्तं तत्तथा भावि तथापि शृणुतां गणौ
शापोद्धारमहं वच्मि क्षमेथा मघमद्य मे १२
वीर्यान्मुनिवरस्याप्त्वा राक्षसेशत्वमादिशम्
स्यातां विभवसंयुक्तौ बलिनो सुप्रतापिनौ १३
सर्वब्रह्मांडराजानौ शिवभक्तौ जितेन्द्रियौ
शिवापरतनोर्मृत्यु प्राप्य स्वं पदमाप्स्यथः १४
सूत उवाच
इत्याकर्ण्य मुनेर्वाक्यं नारदस्य महात्मनः
उभौ हरगणौ प्रीतौ स्वं पदं जग्मतुर्मुदा १५
नारदोऽपि परं प्रीतो ध्यायच्छिवमनन्यधीः
विचचार महीं पश्यञ्छिवतीर्थान्यभीक्ष्णशः १६
काशीं प्राप्याथ स मुनिः सर्वोपरि विराजिताम्
शिवप्रियां शंभुसुखप्रदां शम्भुस्वरूपिणीम् १७
दृष्ट्वा काशीं कृताऽर्थोभूत्काशीनाथं ददर्श ह
आनर्च परम प्रीत्या परमानन्दसंयुतः १८

स मुदः सेव्यतां काशीं कृतार्थो मुनिसत्तमः
नमन्संवर्णयन्भक्त्या संस्मरन्प्रेमविह्वलः १९
ब्रह्मलोकं जगामाथ शिवस्मरणसन्मतिः
शिवतत्त्वं विशेषेण ज्ञातुमिच्छुस्स नारदः २०
नत्वा तत्र विधिं भक्त्या स्तुत्वा च विविधैस्तवैः
पप्रच्छ शिवत्तत्वं शिवसंभक्तमानसः २१
नारद उवाच
ब्रह्मन्ब्रह्मस्वरूपज्ञ पितामह जगत्प्रभो
त्वत्प्रसादान्मया सर्वं विष्णोर्माहात्म्यमुत्तमम् २२
भक्तिमार्गं ज्ञानमार्गं तपोमार्गं सुदुस्तरम्
दानमार्गञ्च तीर्थानां मार्गं च श्रुतवाहनम् २३
न ज्ञातं शिवतत्त्वं च पूजाविधिमतः क्रमात्
चरित्रं विविधं तस्य निवेदय मम प्रभो २४
निर्गुणोऽपि शिवस्तात सगुणश्शंकरः कथम्
शिवतत्त्वं न जानामि मोहितश्शिवमायया २५
सृष्टेः पूर्वं कथं शंभुस्स्वरूपेण प्रतिष्ठितः
सृष्टिमध्ये स हि कथं क्रीडन्संवर्तते प्रभुः २६
तदन्ते च कथं देवस्स तिष्ठति महेश्वरः
कथं प्रसन्नतां याति शंकरो लोकशंकरः २७
संतुष्टश्च स्वभक्तेभ्यः परेभ्यश्च महेश्वरः
किं फलं यच्छति विधे तत्सर्वं कथयस्व मे २८
सद्यः प्रसन्नो भगवान्भवतीत्यनुसंश्रुतम्
भक्तप्रयासं स महान्न पश्यति दयापरः २९
ब्रह्मा विष्णुर्महेशश्च त्रयो देवाश्शिवांशजाः
महेशस्तत्र पूर्णांशस्स्वयमेव शिवः परः ३०

तस्याविर्भावमाख्याहि चरितानि विशेषतः
उमाविर्भावमाख्याहि तद्विवाहं तथा विभो  ३१
तद्गार्हस्थ्यं विशेषेण तथा लीलाः परा अपि
एतत्सर्वं तथान्यच्च कथनीयंत्वयानघ  ३२
तदुत्पत्तिं विवाहं च शिवायास्तुविशेषतः
प्रब्रूहि प्रे प्रजानाथ गुहजन्मतथैव च  ३३
बहुभ्यश्च श्रुतं पूर्वं न तृप्तोऽस्मिजगत्प्रभो
अतस्त्वांशरणं प्राप्तः कृपां कुरु ममो परि  ३४
इति श्रुत्वा वचस्तस्य नारदस्यांगजस्य हि
उवाच वचनं तत्र ब्रह्मालोकपितामहः  ३५
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे
सृष्ट्युपाख्याने नारदप्रश्नवर्णनो नाम पञ्चमोऽध्यायः  ५

ब्रह्मोवाच
भो ब्रह्मन्साधु पृष्टोऽहंत्वया विबुधसत्तम
लोकोपकारिणा नित्यं लोकानां हितकाम्यया  १
यच्छ्रुत्वा सर्वलोकानां सर्वपापक्षयो भवेत्
तदहं ते प्रवक्ष्यामि शिवतत्त्वमनामयम्  २
शिवतत्त्वं मया नैव विष्णुनापि यथार्थतः
ज्ञातञ्च परमं रूपमद्भुतं च परेण न  ३
महाप्रलयकाले च नष्टे स्थावरजंगमे
आसीत्तमोमयं सर्वमनर्कग्रहतारकम्  ४
अचन्द्रमनहोरात्रमनग्न्यनिलभूजलम्
अप्रधानं वियच्छून्यमन्यतेजो विवर्जितम्  ५
अदृष्टत्वादिरहितं शब्दस्पर्शसमुज्झितम्

अव्यक्तगंधरूपं च रसत्यक्तमदिङ्मुखम् ६
इत्थं सत्यं धतमसे सूचीभेद्ये निरंतरे
तत्सद्ब्रह्मेति यच्छ्रुत्वा सदेकं प्रतिपद्यते ७
इतीदृशं यदा नासीद्यत्तत्सदसदात्मकम्
योगिनोंतर्हिताकाशे यत्पश्यंति निरंतरम् ८
अमनोगोचरम्वाचां विषयन्न कदाचन
अनामरूपवर्णं च न च स्थूलं न यत्कृशम् ९
अह्रस्वदीर्घमलघुगुरुत्वपरिवर्जितम्
न यत्रोपचयः कश्चित्तथा नापचयोऽपि च १०
अभिधत्ते स चकितं यदस्तीति श्रुतिः पुनः
सत्यं ज्ञानमनंतं च परानंदम्परम्महः ११
अप्रमेयमनाधारमविकारमनाकृति
निर्गुणं योगिगम्यञ्च सर्वव्याप्येककारकम् १२
निर्विकल्पं निरारंभं निर्मायं निरुपद्रवम्
अद्वितीयमनाद्यन्तमविकाशं चिदात्मकम् १३
यस्येत्थं संविकल्पंते संज्ञासंज्ञोक्तितः स्म वै
कियता चैव कालेन द्वितीयेच्छाऽभवत्किल १४
अमूर्तेन स्वमूर्तिश्च तेनाकल्पि स्वलीलया
सर्वैश्वर्यगुणोपेता सर्वज्ञानमयी शुभा १५
सर्वगा सर्वरूपा च सर्वदृक्सर्वकारिणी
सर्वैकवंद्या सर्वाद्या सर्वदा सर्वसंस्कृतिः १६
परिकल्प्येति तां मूर्तिमैश्वरीं शुद्धरूपिणीम्
अद्वितीयमनाद्यंतं सर्वाभासं चिदात्मकम्
अंतर्दधे पराख्यं यद्ब्रह्म सर्वगमव्ययम् १७
अमूर्तं यत्पराख्यं वै तस्य मूर्तिस्सदाशिवः

अर्वाचीनाः पराचीना ईश्वरं तं जगुर्बुधाः १८
शक्तिस्तदैकलेनापि स्वैरं विहरता तनुः
स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी १९
प्रधानं प्रकृति तां च मायां गुणवतीं पराम्
बुद्धितत्त्वस्य जननीमाहुर्विकृतिवर्जिताम् २०
सा शक्तिरम्बिका प्रोक्ता प्रकृतिस्सकलेश्वरी
त्रिदेवजननी नित्या मूलकारणमित्युत २१
अस्या अष्टौ भुजाश्चासन्विचित्रवदना शुभा
राकाचन्द्रसहस्रस्य वदने भाश्च नित्यशः २२
नानाभरणसंयुक्ता नानागतिसमन्विता
नानायुधधरा देवी फुल्लपंकजलोचना २३
अचिंत्यतेजसा युक्ता सर्वयोनिस्समुद्यता
एकाकिनी यदा माया संयोगाच्चाप्यनेकिका २४
परः पुमानीश्वरस्स शिवश्शंभुरनीश्वरः
शीर्षे मन्दाकिनीधारी भालचन्द्रस्त्रिलोचनः २५
पंचवक्त्रः प्रसन्नात्मा दशबाहुस्त्रिशूलधृक्
कर्पूरगौरसुसितो भस्मोद्धूलितविग्रहः २६
युगपच्च तया शक्त्या साकं कालस्वरूपिणा
शिवलोकाभिधं क्षेत्रं निर्मितं तेन ब्रह्मणा २७
तदेव काशिकेत्येतत्प्रोच्यते क्षेत्रमुत्तमम्
परं निर्वाणसंख्यानं सर्वोपरि विराजितम् २८
ताभ्यां च रमाणाभ्यां च तस्मिन्क्षेत्रे मनोरमे
परमानं दरूपाभ्यां परमानन्दरूपिणी २९
मुने प्रलयकालेपि न तत्क्षेत्रं कदाचन
विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः ३०

अस्यानन्दवनं नाम पुराकारि पिनाकिना
क्षेत्रस्यानंदहेतुत्वादविमुक्तमनंतरम् ३१
अथानन्दवने तस्मिञ्छिवयो रममाणयोः
इच्छेत्यभूत्सुरर्षे हि सृज्यः कोप्यपरः किल ३२
यस्मिन्यस्य महाभारमावां स्वस्वैरचारिणौ
निर्वाणधारणं कुर्वः केवलं काशिशायिनौ ३३
सएव सर्वं कुरुतां स एव परिपातु च
स एव संवृणोत्वं ते मदनुग्रहतस्सदा ३४
चेतस्समुद्रमाकुंच्य चिंताकल्लोललोलितम्
सत्त्वरत्नं तमोग्राहं रजोविद्रुमवल्लितम् ३५
यस्य प्रसादात्तिष्ठावस्सुखमानंदकानने
परिक्षिप्तमनोवृत्तौ बहिश्चिंतातुरे सुखम् ३६
संप्रधार्य्येति स विभुस्तया शक्त्या परेश्वरः
सव्ये व्यापारयांचक्रे दशमेंऽगेसुधासवम् ३७
ततः पुमानाविरासीदेकस्त्रैलोक्यसुंदरः
शांतस्सत्त्वगुणोद्रिक्तोगांभीर्य्यामितसागरः ३८
तथा च क्षमया युक्तोमुनेऽलब्धोपमोऽभवत्
इन्द्रनीलद्युतिः श्रीमान्पुण्डरीकोत्तमेक्षणः ३९
सुवर्णकृतिभृच्छ्रेष्ठदुकूलयुगलावृतः
लसत्प्रचंडदोर्दण्डयुगलोह्यपरा जितः ४०
ततस्सपुरुष श्शंभुं प्रणम्य परमेश्वरम्
नामानि कुरु मे स्वामिन्वद कर्म जगाविति ४१
तच्छ्रुत्वा वचनम्प्राह शंकरः प्रहसन्प्रभुः
पुरुषं तं महेशात्तो वाचा मेघगभीरया ४२
शिव उवाच

विष्णिवतिव्यापकत्वात्ते नाम ख्यातं भविष्यति
बहून्यन्यानि नामानि भक्तसौख्यकराणि ह ४३
तपः कुरु दृढो भूत्वा परमं कार्यसाधनम्
इत्युक्त्वा श्वासमार्गेण ददौ च निगमं ततः ४४
ततोऽच्युतश्शिवं नत्वा चकार विपुलं तपः
अंतर्द्धानं गतश्शक्त्या सलोकः परमेश्वरः ४५
दिव्यं द्वादश साहस्रं वर्षं तप्त्वापि चाच्युतः
न प्राप स्वाभिलषितं सर्वदं शंभुदर्शनम् ४६
तत्तत्संशयमापन्नश्चिंतितं हृदि सादरम्
मयाद्य किं प्रकर्त्तव्यमिति विष्णुश्शिवं स्मरन् ४७
एतस्मिन्नंतरे वाणी समुत्पन्ना शिवाच्छुभा
तपः पुनः प्रकर्त्तव्यं संशयस्यापनुत्तये ४८
ततस्तेन च तच्छ्रुत्वा तपस्तप्त सुदारुणम्
बहुकालं तदा ब्रह्मध्यानमार्गपरेण हि ४९
ततस्स पुरुषो विष्णुः प्रबुद्धोः ध्यानमार्गतः
सुप्रीतो विस्मयं प्राप्तः किं यत्तव महा इति ५०
परिश्रमवतस्तस्य विष्णोः स्वाङ्गेभ्य एव च
जलधारा हि संयाता विविधाश्शिवमायया ५१
अभिव्याप्तं च सकलं शून्यं यत्तन्महामुने
ब्रह्मरूपं जलमभूत्स्पर्शनात्पापनाशनम् ५२
तदा श्रांतश्च पुरुषो विष्णुस्तस्मिञ्जले स्वयम्
सुष्वाप परम प्रीतो बहुकालं विमोहितः ५३
नारायणेति नामापि तस्यसीच्छ्रुतिसंमतम्
नान्यत्किंचित्तदा ह्यासीत्प्राकृतं पुरुषं विना ५४
एतस्मिन्नन्तरे काले तत्त्वान्यासन्महात्मनः

तत्प्रकारं शृणु प्राज्ञ गदतो मे महामते ५५
प्रकृतेश्च महानासीन्महतश्च गुणास्त्रयः
अहंकारस्ततो जातस्त्रिविधो गुणभेदतः ५६
तन्मात्राश्च ततो जातः पञ्चभूतानि वै ततः
तदैव तानीन्द्रियाणि ज्ञानकर्ममयानि च ५७
तत्त्वानामिति संख्यानमुक्तं ते ऋषिसत्तम
जडात्मकञ्च तत्सर्वं प्रकृतेः पुरुषं विना ५८
तत्तदैकीकृतं तत्त्वं चतुर्विंशतिसंख्यकम्
शिवेच्छया गृहीत्वा स सुष्वाप ब्रह्मरूपके ५९

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सृष्टिव्याख्याने
प्रथमखंडे विष्णूत्पत्तिवर्णनो नाम षष्ठोऽध्यायः ६

ब्राह्मोवाच
सुप्ते नारायणे देवे नाभौ पंकजमुत्तमम्
आविर्बभूव सहसा वृहवै सकरेच्छया १
अनंतयष्टिकायुक्तं कर्णिकारसमप्रभम्
अनंतयोजनायाममनंतोच्छ्रायसंयुतम् २
कोटिसूर्यप्रतीकाशं सुंदर वचसयुतम्
अत्यद्भुतं महारम्यं दर्शनीयमनुत्तमम् ३
कृत्वा यत्नं पूर्ववत्स शंकरः परमेश्वरः
दक्षिणांगान्निजान्मां कैसाशीश्शंभुरजीजनत् ४
स मायामोहितं कृत्वा मां महेशो द्रुतं मुने
तन्नाभिपंकजादाविर्भा वयामास लीलया ५
एपमाद्मात्ततो जज्ञे पुत्रोऽहं हेमगर्भकः
चतुर्मुखो रक्तवर्णस्त्रिपुंड्रांकितमस्तकः ६

तन्मायामोहितश्चाहं नाविदं कमलं विना
स्वदेहजनकं तात पितरं ज्ञानदुर्बलः ७
कोहं वा कुत आयातः किं कार्यं तु मदीयकम्
कस्य पुत्रोऽहमुत्पन्नः केनैव निर्मितोऽधुना ८
इति संशयमापन्नं बुद्धिर्मौ समपद्यत
किमर्थं मोहमायामि तज्ज्ञानं सुकरं खलु ९
एतत्कमलपुष्पस्य पत्रारोहस्थलं ह्यधः
मत्कर्ता च स वै तत्र भविष्यति न संशयः १०
इति बुद्धिं समास्थाय कमलादवरो हयन्
नाले नाले गतस्तत्र वर्षाणां शतकं मुने ११
न लब्धं तु मया तत्र कमलस्थानमुत्तमम्
संशयं च पुनः प्राप्तः कमले गन्तुमुत्सुकः १२
आरुरोहाथ कमलं नालमार्गेण वै मुने
कुड्मलं कमलस्याथ लब्धवान्न विमोहिताः १३
नालमार्गेण भ्रमतो गतं वर्षशतं पुनः
क्षणमात्र तदा तत्र ततस्तिष्ठन्विमोहितः १४
तदा वाणी समुत्पन्ना तपेति परमा शुभा
शिवेच्छया परा व्योम्नो मोहविध्वंसिनी मुने १५
तच्छ्रुत्वा व्योमवचनं द्वादशाब्दं प्रयत्नतः
पुनस्तप्तं तपो घोरं द्रष्टुं स्वजनकं तदा १६
तदा हि भगवान्विष्णुश्चतुर्बाहुस्सुलोचनः
मय्येवानुग्रहं कर्तुं द्रुतमाविर्बभूव ह १७
शंखचक्रायुधकरो गदापद्मधरः परः
घनश्यामलसर्वांगः पीताम्बरधरः परः १८
मुकुटादिमहाभूषः प्रसन्नमुखपंकजः

कोटिकंदर्पसंकाशस्सन्दृष्टो मोहितेन सः १६
तद्दृष्ट्वा सुन्दरं रूपं विस्मयं परमं गतः
कालाभं कांचनाभं च सर्वात्मानं चतुर्भुजम् २०
तथाभूतमहं दृष्ट्वा सदसन्मयमात्मना
नारायणं महाबाहु हर्षितो ह्यभवं तदा २१
मायया मोहितश्शम्भोस्तदा लीलात्मनः प्रभोः
अविज्ञाय स्वजनकं तमवोचं प्रहर्षितः २२
ब्रह्मोवाच
कस्त्वं वदेति हस्तेन समुत्थाप्य सनातनम्
तदा हस्तप्रहारेण तीव्रेण सुदृढेन तु २३
प्रबुद्ध्योत्थाय शयनात्समासीनः क्षणं वशी
ददर्श निद्राविक्लिन्ननीरजामललोचनः २४
मामत्र सस्थितं भासाध्यासितो भगवान्हरिः
आह चोत्थाय ब्रह्माणं हसन्मां मधुरं सकृत् २५
विष्णुरुवाच
स्वागतं स्वागतं वत्स पितामह महाद्युते
निर्भयो भव दास्येऽहं सर्वान्कामान्न संशयः २६
तस्य तद्वचनं श्रुत्वा स्मितपूर्वं सुरर्षभः
रजसा बद्धवैरश्च तमवोचं जनार्दनम् २७
ब्रह्मोवाच
भाषसे वत्स वत्सेति सर्वसंहारकारणम्
मामिहाति स्मितं कृत्वा गुरुश्शिष्यमिवानघ २८
कर्तारं जगतां साक्षात्प्रकृतेश्च प्रवर्तकम्
सनातनमजं विष्णुं विरिंचिं विष्णुसंभवम् २६
विश्वात्मानं विधातारं धातारम्पंकजेक्षणम्

किमर्थं भाषसे मोहाद्वक्तुमर्हसि सत्वरम्  ३०
वेदोमां वक्ति नियमात्स्वयंभुवमजं विभुम्
पितामहं स्वराजं च परमेष्ठिनमुत्तमम्  ३१
इत्याकरार्य हरिर्वाक्यं मम क्रुद्धोरमापतिः
सोऽपि मामाह जाने त्वां कर्तारमिति लोकतः  ३२
विष्णुरुवाच
कर्तुं धर्त्तुं भवानंगादवतीर्णो ममाव्ययात्
विस्मृतोऽसि जगन्नाथं नारायणमनामयम्  ३३
पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम्
विष्णुमच्युतमीशानं विश्वस्य प्रभवोद्भवम्  ३४
नारायणं महाबाहुं सर्वव्यापकमीश्वरम्
मन्नाभिपद्मतस्त्वं हि प्रसूतो नात्र संशयः  ३५
तवापराधो नास्त्यत्र त्वयिमायाकृतं मम
शृणु सत्यं चतुर्वक्त्रसर्वदेवेश्वरो ह्यहम्  ३६
कर्ता हर्ता च भर्ता च न मयास्ति समो विभुः
अहमेव परं ब्रह्मपरं तत्त्वं पितामह  ३७
अहमेव परं ज्योतिः परमात्मा त्वहं विभुः
अद्य दृष्टं श्रुतं सर्वं जगत्यस्मिँश्चराचरम्  ३८
तत्तद्विद्धिचतुर्वक्त्र सर्वं मन्मयमित्यथ
मया सृष्टं पुराव्यक्तं चतुर्विंशतितत्त्वकम्  ३९
नित्यं तेष्वणवो बद्धास्सृष्टक्रोधभयादयः
प्रभावाच्चभवानंगान्यनेकानीह लीलया  ४०
सृष्टा बुद्धिर्मया तस्यामहंकारस्त्रिधा ततः
तन्मात्रं पंकजं तस्मान्मनोदेहेन्द्रियाणि च  ४१
आकाशादीनि भूतानि भौतिकानि च लीलया

इति बुद्ध्वा प्रजानाथ शरणं व्रज मे विधे ४२
अहं त्वां सर्वदुःखेभ्यो रक्षिष्यामि न संशयः
ब्रह्मोवाच
इति श्रुत्वा वचस्तस्य ब्रह्मा क्रोधसमन्वितः
को वा त्वमिति संभत्स्याब्रुवं मायाविमोहितः ४३
किमर्थं भाषसे भूरि बह्वनर्थकरं वचः
नेश्वरस्त्वं परब्रह्म कश्चित्कर्ता भवेत्तव ४४
मायया मोहितश्चाहं युद्धं चक्रे सुदारुणम्
हरिणा तेन वै सार्द्धं शंकरस्य महाप्रभोः ४५
एवं मम हरेश्चासीत्संगरो रोमहर्षणः
प्रलयार्णवमध्ये तु रजसा बद्धवैरयोः ४६
एतस्मिन्नंतरे लिंगमभवच्चावयोः पुरः
विवादशमनार्थं हि प्रबोधार्थं तथाऽऽवयोः ४७
ज्वालामालासहस्राढ्यं कालान लशतोपमम्
क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ४८
अनौपम्यमनिर्देश्यमव्यक्तं विश्वसंभवम्
तस्य ज्वालासहस्रेणमोहितो भगवान्हरिः ४९
मोहितं चाह मामत्र किमर्थं स्पर्द्धसेऽधुना
आगतस्तु तृतीयोऽत्र तिष्ठतां युद्धमावयोः ५०
कुत एवात्र संभूतः परीक्षावोऽग्निसंभवम्
अधो गमिष्याम्यनलस्तंभस्यानुपमस्य च ५१
परीक्षार्थं प्रजानाथ तस्य वै वायुवेगतः
भवानूर्ध्वं प्रयत्नेन गंतुमर्हतिसत्वरम् ५२
ब्रह्मोवाच
एवं व्याहृत्य विश्वात्मा स्वरूपमकरोत्तदा

वाराहमहमप्याशु हंसत्वं प्राप्तवान्मुने ५३
तदा प्रभृति मामाहुर्हंसहंसो विराडिति
हंसहंसेति यो ब्रूयात्स हंसोऽथ भविष्यति ५४
सुश्वे ह्यनलप्रख्यो विश्वतः पक्षसंयुतः
मनो निलजवो भूत्वा गत्वोद्ध्र्व चोद्ध्र्वतः पुरा ५५
नारायणोऽपि विश्वात्मा सुश्वेतो ह्यभवत्तदा
दशयोजनविस्तीर्णं शतयोजनमायतम् ५६
मेरुपर्तववर्ष्माणं गौरतीक्ष्णोग्रदंष्ट्रिणम्
कालादित्यसमाभासं दीर्घघोणं महास्वनम् ५७
ह्रस्वपादं विचित्रांगंजैत्रं दृढमनौपमम्
वाराहाकारमास्थाय गतवांस्तदधौ जवात् ५८
एवम्वर्षसहस्रं चरन्विष्णुरधो गतः
तथाप्रभृति लोकेषु श्वेतवाराहसंज्ञकः ५९
कल्पो बभूव देवर्षे नराणां कालसंज्ञकः
बभ्राम बहुधा विष्णुः प्रभविष्णुरधोगतः ६०
नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः
तावत्कालं गतश्चोद्ध्र्वमहमप्यरिसूदन ६१
सत्वरं सर्वयत्नेन तस्यान्तं ज्ञातुमिच्छया
श्रान्तो न दृष्ट्वा तस्यांतमहं कालादधोगतः ६२
तथैव भगवान्विष्णुश्श्रांतं कमललोचनः
सर्वदेवनिभस्तूर्णमुत्थितस्समहावपुः ६३
समागतो मया सार्द्धं प्रणिपत्य भवं मुहुः
मायया मोहितश्शंभोस्तस्थौ संविग्नमानसः ६४
पृष्ठतः पार्श्वतश्चैव ह्यग्रतः परमेश्वरम्
प्रणिपत्य मया सार्धं सस्मार किमिदं त्विति ६५

अनिर्देश्यं च तद्रूपमनाम कर्मवर्जितम्
अलिंगं लिंगतां प्राप्तं ध्यानमार्गेप्यगोचरम्  ६६
स्वस्थं चित्तं तदाकृत्वा नमस्कार परायणो
बभूवतुरुभावावामहं हरिरपि ध्रुवम्  ६७
जानीवो न हि ते रूपं योऽसियोऽसि महाप्रभो
नमोऽस्तुते महेशान रूपं दर्शयनौत्वरन्  ६८
एवं शरच्छतान्यासन्नमस्कारं प्रकुर्वतोः
आवयोर्मुनिशार्दूलमदमास्थितयोस्तदा  ६९
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे
विष्णुब्रह्मविवादवर्णनो नाम सप्तमोऽध्यायः  ७

ब्रह्मोवाच
एवं तयोर्मुनिश्रेष्ठ दर्शनं कांक्षमाणयोः
विगर्वयोश्च सुरयोः सदा नौ स्थितयोर्मुने  १
दयालु रभवच्छंभुर्दीनानां प्रतिपालकः
गर्विणां गर्वहर्ता च सर्वेषां प्रभुरव्ययः  २
तदा समभवत्तत्र नादो वै शब्दलक्षणः
ओमोमिति सुरश्रेष्ठात्सुव्यक्तः प्लुतलक्षणः  ३
किमिदं त्विति संचिंत्य मया तिष्ठन्महास्वनः
विष्णुस्सर्वसुराराध्यो निर्वैरस्तुष्टचेतसा  ४
लिंगस्य दक्षिणे भागे तथापश्यत्सनातनम्
आद्यं वर्णमकाराख्यमुकारं चोत्तरं ततः  ५
मकारं मध्यतश्चैव नादमंतेऽस्य चोमिति
सूर्यमंडलवद्दृष्ट्वा वर्णमाद्यं तु दक्षिणे  ६
उत्तरे पावकप्रख्यमुकारमृषि सत्तम

शीतांशुमराडलप्रख्यं मकारं तस्य मध्यतः  ७
तस्योपरि तदाऽपश्यच्छुद्धस्फटिकसुप्रभम्
तुरीयातीतममलं निष्कलं निरुपद्रवम्  ८
निर्द्वंद्वं केवलं शून्यं बाह्याभ्यंतरवर्जितम्
स बाह्यभ्यंतरे चैव बाह्याभ्यंतरसंस्थितम्  ९
आदिमध्यांतरहितमानंदस्यापिकारणम्
सत्यमानन्दममृतं परं ब्रह्म परायणम्  १०
कुत एवात्र संभूतः परीक्षावोऽग्निसंभवम्
अधोगमिष्याम्यनलस्तंभस्यानुपमस्य च  ११
वेदशब्दोभयावेशं विश्वात्मानं व्यचिंतयत्
तदाऽभवदृषिस्तत्र ऋषेस्सारतमं स्मृतम्  १२
तेनैव ऋषिणा विष्णुर्ज्ञातवान्परमेश्वरम्
महादेवं परं ब्रह्म शब्दब्रह्मतनुं परम्  १३
चिंतया रहितो रुद्रो वाचो यन्मनसा सह
अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः  १४
एकाक्षरेण तद्वाक्यमृतं परमकारणम्
सत्यमानन्दममृतं परं ब्रह्म परात्परम्  १५
एकाक्षरादकाराख्याद्भगवान्बीजकोराडजः
एकाक्षरादुकाराख्याद्धरिः परमकारणम्  १६
एकाक्षरान्मकाराख्याद्भगवान्नीललोहितः
सर्गकर्ता त्वकाराख्यो ह्युकाराख्यस्तु मोहकः  १७
मकाराख्यस्तु यो नित्यमनुग्रहकरोऽभवत्
मकाराख्यो विभुर्बीजी ह्यकारो बीज उच्यते  १८
उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः
बीजी च बीजं तद्योनिर्नादाख्यश्च महेश्वरः  १९

बीजी विभज्य चात्मानं स्वेच्छया तु व्यवस्थितः
अस्य लिंगादभूद्बीजमकारो बीजिनः प्रभोः २०
उकारयोनौ निःक्षिप्तमवर्द्धत समं ततः
सौवर्णमभवच्चांडमावेद्यं तदलक्षणम् २१
अनेकाब्दं तथा चाप्सु दिव्यमंडं व्यवस्थितम्
ततो वर्षसहस्रांते द्विधाकृतमजोद्भवम् २२
अंडमप्सु स्थितं साक्षाद्व्याघातेनेश्वरेण तु
तथास्यसुशुभं हिमं कपालं चोद्ध्र्वसंस्थितम् २३
जज्ञे सा द्यौस्तदपरं पृथिवी पंचलक्षणा
तस्मादंडाद्भवो जज्ञे ककाराख्यश्चतुर्मुखः २४
अ स्रष्टा सर्वलोकानां स एव त्रिविधः प्रभुः
एवमोमोमिति प्रोक्तमित्याहुर्यजुषां वराः २५
यजुषां वचनं श्रुत्वा ऋचः समानि सादरम्
एवमेव हरे ब्रह्मन्नित्याहुश्चावयोस्तदा २६
ततो विज्ञाय देवेशं यथावच्छक्तिसंभवैः
मंत्रं महेश्वरं देवं तुष्टाव सुमहोदयम् २७
एतस्मिन्नंतरेऽन्यच्च रूपमद्भुतसुन्दरम्
ददर्श च मया सार्द्धं भगवान्विश्वपालकः २८
पंचवक्त्रं दशभुजंगौरकर्पूरवन्मुने
नानाकांति समायुक्तं नानाभूषणभूषितम् २९
महोदारं महावीर्यं महापुरुषलणम्
तं दृष्ट्वा परमं रूपं कृतार्थोऽभून्मया हरिः ३०
अथ प्रसन्नो भगवान्महेशः परमेश्वरः
दिव्यं शब्दमयं रूपमाख्याय प्रहसन्स्थितः ३१
अकारस्तस्य मूर्द्धा हि ललाटो दीर्घ उच्यते

इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ३२
उकारो दक्षिणं श्रोत्रमूकारो वाम उच्यते
ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ३३
वामं कपोलमूकारो लृ लॄ नासापुटे उभे
एकारश्चोष्ठ ऊद्र्ध्वश्च ह्यैकारस्त्वधरो विभोः ३४
ओकारश्च तथौकारो दन्तपंक्तिद्वयं क्रमात्
अमस्तु तालुनी तस्य देवदेवस्य शूलिनः ३५
कादिपंचाक्षराण्यस्य पञ्च हस्ताश्च दक्षिणे
चादिपंचाक्षराण्येवं पंच हस्तास्तु वामतः ३६
टादिपंचाक्षरं पादास्तादिपंचाक्षरं तथा
पकार उदरं तस्य फकारः पार्श्व उच्यते ३७
बकारो वामपार्श्वस्तु भकारः स्कंध उच्यते
मकारो हृदयं शंभोर्महादेवस्य योगिनः ३८
यकारादिसकारान्ता विभोर्वै सप्तधातवः
हकारो नाभिरूपो हि क्षकारो घ्राण उच्यते ३९
एवं शब्दमयं रूपमगुणस्य गुणात्मनः
दृष्ट्वा तमुमया सार्द्धं कृतार्थोऽभून्मया हरिः ४०
एवं दृष्ट्वा महेशानं शब्दब्रहम तनुं शिवम्
प्रणम्य च मया विष्णुः पुनश्चापश्यदूद्र्ध्वतः ४१
ॐकारप्रभवं मंत्रं कलापंचकसंयुतम्
शुद्धस्फटिकसंकाशं शुभाष्टत्रिंशदक्षरम् ४२
मेधाकारमभूद्भूयस्सर्वधर्मार्थसाधकम्
गायत्रीप्रभवं मंत्रं सहितं वश्यकारकम् ४३
चतुर्विंशतिवर्णाढ्यं चतुष्कालमनुत्तमम्
अथ पंचसितं मंत्रं कलाष्टकसमायुतम् ४४

आभिचारिकमत्यर्थं प्रायस्त्रिंशच्छुभाक्षरम्
यजुर्वेदसमायुक्तं पञ्चविंशच्छुभाक्षरम् ४५
कलाष्टकसमा युक्तं सुश्वेतं शांतिकं तथा
त्रयोदशकलायुक्तं बालाद्यैस्सह लेहितम् ४६
बभूवुरस्य चोत्पत्तिवृद्धिसंहारकारणम्
वर्णा एकाधिकाः षष्टिरस्य मंत्रवरस्य तु ४७
पुनर्मृत्युंजयं मन्त्रं पञ्चाक्षरमतः परम्
चिंतामणिं तथा मंत्रं दक्षिणामूर्ति संज्ञकम् ४८
ततस्तत्त्वमसीत्युक्तं महावाक्यं हरस्य च
पञ्चमंत्रांस्तथा लब्ध्वा जजाप भगवान्हरिः ४९
अथ दृष्ट्वा कलावर्णमृग्यजुस्सामरूपिणम्
ईशानमीशमुकुटं पुरुषाख्यं पुरातनम् ५०
अघोरहृदयं हृद्यं सर्वगुह्यं सदाशिवम्
वामपादं महादेवं महाभोगीन्द्रभूषणम् ५१
विश्वतः पादवन्तं तं विश्वतोक्षिकरं शिवम्
ब्रह्मणोऽधिपति सर्गस्थितिसंहारकारणम् ५२
तुष्टाव वाग्भिरिष्टाभिस्साम्बं वरदमीश्वरम्
मया च सहितो विष्णुर्भगवांस्तुष्टचेतसा ५३

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे
सृष्ट्युपाख्याने शब्दब्रह्मतनुवर्णनो नामाष्टमोऽध्यायः ८

Credits
Source: *The Śivamahāpurāṇam*, (Delhi: Nag Publishers, 1986).

ईशानमीशनुकुटं पुरुषाख्यं तुरातनम् ।।४५
अघोरहृदयं हृदयं सर्वगुह्यं सदाशिवम् ।
वामापादं महादेवं महाभोगीन्द्रभूषणम ।।४६
विश्वतः पादवन्तं त विश्वतोऽक्षिकरं शिवम् ।
ब्रह्मणोऽधिपति सर्गस्थिति संहारकारणम् ।।४७
तुष्टाव वाग्भिरिष्टाभिः साम्बं वरदमीश्वरम् ।
मया च सहितो विष्णुर्भगवास्तुष्टचेतसा ।।४८

फिर मृत्युंजय मंत्र अथवा त्र्यंबक मंत्र और इसके उपरान्त पंचाक्षर मंत्र (नमः शिवाय) व चिन्तामणि मंत्र और दक्षिणमूर्ति मंत्र को ग्रहण करे ।४३। 'तत्वमसि' शिवजी का महा वाक्य है । इन पाँचों मन्त्रों को ग्रहण कर भगवान् ने जप किया ।।४४।। फिर ऋक्, यजु और साम रूपी कला वर्ण, जो ईशान, ईश मुकुट, पुरातन पुरुष हैं, उन्हें देखकर ।।४५।। अघोर हृदय, सव में गुह्य, सदाशिव वामपाद महा-भोगीन्द्र एवं महादेव के भूषण को धारण करे ।४६। जिनके सभी ओर नेत्र हैं, जो ब्रह्माजी के अधीश्वर, सर्ग स्थित तथा संहार कर्त्ता हैं ।४७। साम्बशिव वर देने वाले हैं उनको वाणियों से संतुष्ट करने लगे । इस प्रकार मैंने विष्णुजी के सहित अत्यन्त प्रीतिपूर्वक उनकी स्तुति की ।४८।

## * हरिहर की अभेदता और परमशिवतत्व वर्णन *

अन्यच्छृणु हरे विष्णो शासनं मम सुव्रत ।
सदा सर्वेषु लोकेषु मान्यः पूज्यो भविष्यसि ।।१
ब्रह्मणा निर्मिते लोके यदा दुःखं प्रजायते ।
तदा त्वं सर्व दुःखानां नाशाय तत्परो भव ।।२
रुद्रध्येयो भवांश्चैव भवद्ध्येयो हरस्तथा ।
युवयोरन्तरं नैव तव रुद्रस्य किंचन ।।३
वस्तुतश्चापि चैकत्वं वरतोऽपि तथैव च ।
लीलयापि महाविष्णो यत्यं सत्यं न संशयः ।।४
रुद्रभक्तो नरो यस्तु तव निन्दां करिष्यति ।
तस्य पुण्यं च निखिलं द्रुतं भस्म भविष्यति ।।५

नरके पतनं तस्य त्वद्द्वेषात्पुरुषोत्तम ।
मदाज्ञया भवेद्विष्णो सत्यं सत्यं न संशयः ।।६
त्वां यः समाश्रितो नूनं मामेव स समाश्रितः ।
अन्तरं यश्च जानाति निरये पतित ध्रुमम् ।।७
आयुर्बलं शृणुष्वाद्य त्रिदशातां विशेषतः ।
संदेहोऽत्र न कर्त्तव्यो ब्रह्माविष्णुहरात्मनाम् ।।८
त्वद्भक्तो यो भवेत्स्वामिन्मम् प्रियतरो हि सः ।
एवं वै यो बिजानाति तस्य मुक्तिर्न दुर्लभाः ।।६

परमेश्वर शिवजी ने कहा—हे विष्णो ! हे सुव्रत ! तुम मेरी आज्ञा श्रवण करो । तुम सदैव सभी लोकों में मान्य एवं पूजनीय होंगे ।१। ब्रह्माजी द्वारा रचे गये लोक में जब दुःख पड़ेगा तब तुम उस दुःख से लोकों को उबारने में तत्पर रहोगे ।।२।। तुम दोनों को रुद्र का ध्यान करना उचित है । हे ब्रह्मा ! तुम्हारे ध्यान के योग्य विष्णु हैं, तुम दोनों में और रुद्र में कोई भेद नहीं है ।३। यथार्थ में तुम तीनों एक तत्व-रूप ही हो । हे विष्णो ! यह सब अंतर लीला मात्र का ही है, यथार्थ में नहीं है ।४। जो रुद्रभक्त तुम्हारा निन्दक हो, उसका सम्पूर्ण पुण्य नष्ट हो जाता है ।।५।। हे पुरुषोत्तम ! हे विष्णो ! जो कोई तुमसे द्वेष करेगा, वह नरकगामी होगा, इसमें संशय नही है ।६। जो तुम्हारा आश्रय लेता है, वही मेरा आश्रित है, हम तुममें अन्तर समझने वाला अवश्य ही नरक को प्राप्त होगा ।७। तुम देवताओं के आयुर्बल को श्रवण करो । ब्रह्मा, विष्णु, और शिव के एकत्व में सन्देह नही करना चाहिये ।।८।। ब्रह्मा, विष्णु ने कहा—हे स्वामिन् ! आपका कथन यथार्थ है । जो आपका भक्त होगा, वही मेरे लिये प्रिय होगा, जो इस प्रकार जानेगा उसके लिए मोक्ष दुर्लभ नहीं है ।।६।।

## * शिव पूजन की विधि और उसका फल *

सूत सूत महाभाग व्यासशिष्य नमोऽस्तुते ।
श्रीविताऽद्याद्भुता शैवी कथा परमपावनी ।।१

तत्राद्भुता महादिव्या लिंगोत्पत्तिः श्रुता शुभा।
श्रुत्वा यस्याः प्रभावं दुःखनाशो भवेदिह ।२
ब्रह्मानारदसम्वादमनुसृत्य दयानिधे।
शिवार्चनविधिं ब्रूहि येन तुष्टो भवेच्छिवः ।३
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्या पूज्यते शिवः।
कथं कार्यं च तद् ब्रूहि यथा व्यासमुखाच्छ्रुतम् ।४
तच्छ्रुत्वा वचनं तेषां शर्मदं श्रुतिसम्मतम्।
उवाच सकलं प्रीत्या मुनिप्रश्नानुसारतः ।५
साधु पृष्टं भवद्भिश्च तद्रहस्यं मुनीश्वराः।
तदहं कथयाम्यद्य यथाबुद्धि यथाश्रुतम् ।६
भवद्भिः पृच्छ्यते यद्वत्तथा व्यासेन वै पुरा।
पृष्टं सनत्कुमाराय तच्छ्रुतं ह्युपमन्युना ।७
ततो व्यासेन वै श्रुत्वा शिवपूजादिकं च यत्।
मह्यं च पठितं लोकानां हितकाम्यया ।८

ऋषियों ने कहा—हे सूतजी! आपको नमस्कार है, आपने परम पावनी शिव कथा कही है।१। उसमें अद्भुत दिव्य लिंग की उत्पत्ति सुनी, जिसके प्रभाव से इस लोक में दुःखों का क्षय होता है।२। ब्रह्मा, और नारद के सम्वाद को स्मरण कर आप शिव की पूजा विधि कहिये, जिससे शिवजी संतुष्ट हो सकें।२। ब्राह्मण, क्षत्रिय, वैश्य शूद्र यह सभी शिवजी की पूजा करते हैं, व्यासजी उसे किस प्रकार करने का उपदेश करते हैं, सो कहने की कृपा करें।४। उनके ऐसे कल्याणप्रद तथा श्रुति-सम्मत वाक्य सुनकर सूतजी कहने लगे।५। हे मुनियो! आपने बड़ा उत्तम प्रश्न किया है। मैंने जैसा सुना है, वैसा ही कहता हूँ।६। जो प्रश्न आपने किया है वही व्यासजी ने सनत्कुमार से किया था। जो उन्होंने कहा और उपमन्यु ने सुना था।७। फिर शिवार्चन को सम्पूर्ण विधि लोकों के हितार्थ व्यासजी ने मुझे पढ़ाया।८।

तच्छ्रुतं चैव कृष्णेन ह्युपमन्योर्महात्मनः।
तदहं कथयिष्यामि यथा ब्रह्माऽवदत्पुरा ।९

श्रृणु नारद वक्ष्यामि संक्षेपाल्लिंगपूजनम् ।
वक्तुं वर्षशतेनापि न शक्यं विस्तरान्मुने ।१०
एवं तु शांकरं रूपं सुखं स्वच्छ सनातनम् ।
पूजयेत्परया भक्त्या सवकामफलाप्तये ।११
दारिद्रयं रोगदुःखं च पीडनं शत्रुसम्भवम् ।
पापं चतुर्विध तावद्या बन्नाचयते शिवम् ।१२
सम्पूजिते शिवे देवे सर्वदुःखं विलीयते ।
सम्पद्यते सुखं सर्वं पश्चान्मुक्तिरवाप्यते ।१३
ये वै मानुष्यमाश्रित्य मुख्यं सनातनः सुखम् ।
तेन पूज्यो महादेवः सर्वकार्यार्थसाधकः ।१४
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च विधिवत्क्रमात् ।
शङ्करार्चा प्रकुर्वन्तु सर्वकामार्थसिद्धये ।१५

उपमन्यु ने वह सब श्री कृष्ण को सुनाया था, जैसे ब्रह्माजी ने कहा था, वैसे ही मैं तुमसे कहता हूँ ।९। ब्रह्माजी ने कहा—हे नारदजी ! मैं संक्षेप में लिंग-पूजा की विधि कहता हूँ, इसे विस्तार पूर्वक तो सौ वर्ष में भी नहीं कहा जा सकता ।१०। इस प्रकार शिवजी का स्वरूप सुखदायक एवं सनातन है । सम्पूर्ण कामनाओं की प्राप्ति के लिये उनका परम भक्तिपूर्वक पूजन करे ।११। दारिद्रय, रोग, दुःख तथा शत्रु की पीड़ा यह चार प्रकार के संकट तभी रहते हैं, जब तक कि शंकर की पूजा नहीं की जाती ।१२। भगवान का पूजन करने से सभी दुःखों का लोप हो जाता है और सर्व सुख की प्राप्ति होकर अन्त में मोक्ष मिलती है ।१३। मनुष्य जन्म में सन्तान का ही मुख्य सुख है, इसकी प्राप्ति के हेतु सर्वार्थ-साधक भगवात् शिवजी का पूजन करे ।१४। सम्पूर्ण कामनाओं की सिद्धि के लिए चारों वर्णों को क्रमशः शिवार्चन करना चाहिये ।१५।

प्रातःकाले समुत्थाय मुहूर्ते ब्रह्मसंज्ञके ।
गुरोश्च स्मरणं कृत्वा शंभोश्चव तथा पुनः ।१६
तीर्थानां स्मरणं कृत्वा ध्यानं चैव हरेरपि ।
ममापि गिर्जराणां वै मुन्यादीनां तथा मुने ।१७

ततः स्तोत्रं शंभुनाम गृह्णीयाद्विधिपूर्वकम् ।
तथोत्थाय मलोत्सर्गं दक्षिणस्यां चरेद्दिशि ॥१८
एकान्ते तु विधिं कुर्यान्मलोत्सर्गस्य तच्छ्रुतम् ।
तदेव कथयाम्यद्य श्रृण्वाधाम मनो मुने ॥१६
शुद्धां मृद द्विजो लिप्यात्पंचवारं विशुद्धये ।
क्षत्रियश्च चतुर्वारं वैश्यो वारत्रयं तथा ॥२०
शूद्रो द्विवारं च मृदं गृह्णीयाद्विधिशुद्धये ।
गुदे वाथ सकृल्लिगे वारमेकं प्रयत्नतः ॥२१

प्रातःकाल ब्रह्म मुहूर्त में उठे और गुरु तथा शिवजी का स्मरण करे ॥१६॥ फिर तीर्थों का स्मरण और शंकर का ध्यान करके मेरा स्मरण करे और फिर देवताओं और मुनियों का ध्यान करे ॥१७॥ शिवनाम के स्तोत्र का विधिवत् जप करे और फिर उठकर दक्षिण दिशा में जाकर मल त्याग करे ॥१८॥ शास्त्रानुसार मलोत्सर्ग एकान्त में करे । हे मुने ! उसकी विधि आपसे कहता हूँ, ध्यान से सुनो ।१६। शुद्धि के लिए ब्राह्मण को मृत्तिका से पाँच बार हाथ धोने चाहिए, क्षत्रिय चार बार तथा वैश्य तीन बार हाथ धोवे ॥२०॥ शूद्र दो बार मिट्टी से हाथ धोवे, गुदा और लिंग में भी एक बार मिट्टी लगावे ॥२१॥

दशावारं वामहस्ते सप्तवारं द्वयोस्तथा ।
प्रत्येकम्पादयोस्तात त्रिवारं कारयोः पुनः ॥२२
स्त्रीभिश्च शूद्रवत्कार्यं मृदाग्रहणमुत्तमम् ।
हस्तौ पादौ च प्रक्षाल्य पूर्ववन्मृदमापरेत् ॥२३
दंतकाष्ठं ततः कुर्यात्स्ववर्णक्रमओ नरः ॥२४
विप्रः कुर्याद्दंतकाष्टं द्वादशांगुलमानतः ।
एकादशांगुलं राजा वश्यः कुर्याद्दशांगुलम् ॥२५
शूद्रोनवांगुलं कुर्यादिति मानमिदं स्मृतम् ।
कालदोषं विचार्य्यैव मनुदृष्टं विबजयेत् ॥२६
षष्ठ्याद्यामाश्च मवमी व्रतमस्तं रवेर्दिनम् ।
तथा श्राद्धदिनं तात निषिद्धं रदधावने ॥२७

स्नानं तु विधिवत्कार्यं तीर्थादिषु क्रमेण तु ।
देशकालविशेषेण स्नानं कार्यं समन्त्रकम् ॥२८

बाँए हाथ से दस बार, फिर दोनों हाथों से सात-सात बार मृत्तिका लगावे, पाँव के तले में तीन बार लगाकर फिर तीन बार हाथ धोवे। ।२। स्त्रियों को शूद्र के समान मिट्टी से हाथ धोने चाहिये। हाथ पाँव धोकर पूर्ववत् मिट्टी ग्रहण करे ॥२३॥ फिर अपने वर्ण क्रम के अनुरूप दाँतुन करे ॥२४॥ ब्राह्मण को बारह अंगुल की दाँतुन करने का विधान हैं, क्षत्रिय को ग्यारह अंगुल की और वैश्य को दस अंगुल की ॥२५॥ शूद्र भी नौ अंगुल की दाँतुन करे। इस प्रकार प्रमाण कहा गया है। काल-दोष का विचार करके क्रिया करे तो दृष्ट को भी वर्जित किया जा सकता है ।२६। छ, अमावस, नवमी व्रत का दिन, सूर्यास्त के समय, रविवार अथवा श्राद्ध के दिन दाँतुन करने का निषेध है ।२७। तीर्थादि में क्रमपूर्वक तथा विधि सहित स्नान करे, विशेषकर देशकाल के अनुसार ओर मन्त्र सहित स्नान करना चाहिये ॥२८॥

आचम्य प्रथमं तत्र धौतवस्त्रेण चाधरेत् ।
एकांते सुस्थले स्थित्वा संध्याविधिमथाचरेत् ॥२९
यथायोग्यं विधिं कृत्वा पूजाविधिमथारभेत् ।
मनस्तु सुस्थिरं कृत्वा पूजागारं प्रविश्य च ॥३०
पूजाविधिं समावाय स्वासने ह्युपविश्य वै ।
न्यासादिकं विधायादो पूजयेत्क्रमशो हरम् ॥३१
प्रथमं च गणाधीशं द्वारपालांस्तथैव च ।
दिक्पालांश्च सुसंपूज्य पश्चात्पीठं प्रकल्पयेत् ॥३२
अथवाऽष्टदलं कृत्वा पूजाद्रव्यसमीपतः ।
उपविश्य ततस्तत्र चोपवेश्य शिवं प्रभुम् ॥३३
त्रयमाचमनं कृत्वा प्रक्षाल्य च पुनः करौ ।
प्राणायामत्रयं कृत्वा मध्ये ध्यायेच्च त्र्यम्बकम् ॥३४
पचपवक्त्रं दशभुजां शुद्धस्फटिकसन्निभम् ।
सर्वाभरणासंयुक्तं व्याघ्रचर्मोत्तरीयकम् ॥३५

स्नान करने के पश्चात् धुले हुए वस्त्र धारण करे फिर स्वच्छ स्थान में एकान्त में बैठकर संध्या करे ।।२९।। यथाविधि करके, पूजन आरम्भ करे, मन को स्थिर करके पूजा स्थान में प्रवेश करे ।३०। विधि सहित आसन ग्रहण कर न्यासादि करे और फिर क्रम से शिवजी का पूजन करे ।३१। प्रथम गणेशजी को पूजे, फिर द्वारपाल और दिकपालों का पूजन करे और सिंहासन की कल्पना करे ।३२। अथवा पूजा द्रव्य के निकट अष्टदल कमल बनाकर स्वयं बैठे और वहाँ भगवान् शिवजी की स्थापना करे ।३३। फिर तीन आचमन कर हाथ धोवे और तीन प्राणायाम कर मध्य में त्र्यम्बकदेव का ध्यान करे ।३४। पाँच मुख, दश भुजा, स्फटिक मणि के समान स्वच्छ सम्पूर्ण आभरण, व्याघ्र चर्म उत्तरीय सहित सुशोभित ।३५।

तस्य सारूप्यतां स्मृत्वा ददेत्पापं नरः सदा ।
शिवं ततः समुत्थाप्य पूजयेत्परमेश्वरम् ।३६
देहशुद्धि ततः कृत्वा मूल मन्त्रं न्यसेत्क्रमात् ।
सवत्र प्रणवेनैव षडगन्यासमाचरेत् ।३७
कृत्वा हृदि प्रयोगं च ततः पूजां समारभेत् ।
पाद्यार्गायमनार्थं च पात्राणि च प्रकल्पयेत् ।३८
स्थापयेद्विविधात्कुंभान्नव धीमान्यथाविधि ।
दर्भैराच्छाद्य तैरेव संस्थाप्याभ्युक्ष्य वारिणा ।३९
तेषु तेषु च सर्वेषु क्षिपेत्तोयं सुशीतलम् ।
प्रणवेन क्षिपेत्तेषु द्रव्याण्यालोक्यं बुद्धिमान् ।४०
उशीरं चन्दनं चैव पाद्यं तु परिकल्पयेत् ।
जातिकंकोलकर्पूरवटमूलतमालकम् ।४१
चूर्णयित्वा तथान्यायं क्षिपेदाचमनीयके ।
एतत्सर्वेषु पात्रेषु दापयेच्चनव नान्वितम् ।।४२

भगवान शिवजी की सारूप्यता को प्राप्त होकर प्राणी अपने पापों को

सदैव क्षीण करे, फिर भगवान् शिव को उठाकर उनकी पूजा करे ।३६। फिर देह की शुद्धि कर क्रम पूर्वक मूलमन्त्र का न्यास करे, ओंकार के सहित षडग न्यास करना चाहिये ।३७। हृदय में प्रयोग करके पूजन प्रारम्भ करे और पाद्य, अर्घ्य, आचमन के लिए पात्रों की कल्पना करे ।३८। यथाविधि नवीन घट स्थापित करे, फिर कुशों से आच्छादित करके जल से छिड़के ।३९। उन सब पात्रों में शीतल जल भरे और द्रव्यों को ग्रहण कर प्रणवोच्चार सहित उसमें डाले ।४०। पाद्य में उशीर और चन्दन प्रयोग करे । जायफल, कंकोल, कर्पूर, वटमूल और तमाल ।४१। सबको चूर्ण कर आचमन में डाले तथा चन्दन आदि भी इन पदार्थों में मिलावे ।४२।

पार्श्वयोर्देवदेवस्य नंदीशं तु समर्चयेत् ।
गंधैर्धूपस्तथा दीपैर्विविधः पूजयेच्छिवम् ।४३
लिंगशुद्धिं ततः कृत्वा मुद युक्तो नरस्तदा ।
यथोचित तु मन्त्रोधैः प्रणवादिनमोतकैः ।४४
कल्पयेदासनं स्वस्तिपद्मादि प्रणवेन तु ।
तस्मात्पूवदिश साक्षादणिमामयमक्षरम् ।४५
लघिमा ेक्षिण चैव महिमा पश्चिमं तथा ।
प्राप्तश्च वोत्तर पत्रं प्राकाम्यं पावकस्य च ।४६
ईक्षित्वं नैऋर्त पत्रं वशित्वं वायुगोचरे ।
सर्वज्ञत्व तथशान्यं कर्णिका सोम उच्यते ।४७
सोमस्याथस्तथा सूर्यस्तस्याधः पावकस्त्वयम् ।
धर्मादीनपि तस्याधो भवतः कल्पयेत्क्रमाद् ।४८
अव्यक्तादि चतुर्दिक्षु सोमस्यांते गुणत्रयन् ।
सद्योजातं प्रवक्ष्यामीस्यावाह्य परमेश्वरम् ।४९

महादेवजी के पार्श्व में नन्दीजन का पूजन करे और विविध गन्ध, धूप, दीप से शिव का पूजन करे ।४३। फिर लिंग की शुद्धि कर, मन से ओंकार सहित नमस्कार करे ।४४। ओंकार सहित स्वस्ति कमल आदि युक्त आसनकी कल्पना करे और पूर्व की ओर साक्षात् अणिमायुक्त अक्षर

को ।४५। लघिमा सिद्धि दक्षिण की ओर, महिमा पश्चिम की ओर, प्राप्ति उत्तर की ओर तथा प्राकाम्य अग्नि दिशा में ।४६। ईशित्व नैऋत्य दिशा में, वशित्व को वायुकोण के दल में, सर्वज्ञ सिद्धि को ईशान में कल्पित करे तथा कर्णिका सोम कही जाती है ।४७। सोम के नीचे सूर्य उसके नीचे धर्मादि की कल्पना क्रमपूर्वक करे ।४८। अव्यक्तादिको चारों दिशाओं में, सोम के अन्त में तीनों गुणों को कल्पित करे तथा 'सद्योजातं प्रवक्ष्यामि' आदि मन्त्र से ईश्वर का आह्वान करना चाहिए ।४९।

वामदेवेन मन्त्रेण तिष्ठेच्चवासनोपरि ।
सान्निध्यं रुद्रगायत्र्या अघोरेण निरोधयेत् ।।५०
ईशानं सर्वविद्यानामिति मन्त्रेत्र पूजयेत् ।
पाद्यमाचमनीयं च विधायार्घ्यं प्रदापयेत् ।।५१
स्थापयेद्विधिना रुद्रं गंधचन्दनवारिणा ।
पञ्चगव्यविधानेन गृह्य पात्रेऽभिमन्त्र्य च ।।५२
प्रणवेनैव गव्येन स्नापयेत्मयसा च तम् ।
दध्ना च मधुना चैव तथा चेक्षुरसेन तु ।।५३
घृतेन तु तथा पूज्य सर्वकामहितावहम् ।
पुण्यैर्द्रव्यैर्महादेवं प्रणवेनाभिषेचयेत् ।।५४
पवित्रजलभाण्डेषु मंत्रैस्तोयं क्षिपेत्ततः ।
शुद्धीकृत्य यथान्यायं सितवस्त्रेण साधकः ।।५५
तावद्दूरं न कर्त्तव्यं न यावच्चन्दनं क्षिपेत् ।
तन्दुलैः सुन्दरैस्तत्र पूजयेच्छंकरम्मुदा ।।५६

वामदेव मन्त्रसे आसन पर स्थित हो, रुद्र गांयत्री से उनका सामीप्य तथा 'अघोरेभ्यो अथघोरेभ्यो' मन्त्र से निरोध करे ।५०। 'ईशानः सर्वविद्यानाम्' आदि मन्त्र से पूजा करे और पाद्य आचमन के पश्चात् अर्घ्य दे ।५१। गन्ध चन्दन के जल से विधिवत् रुद्र की स्थापना करे फिर पंच गव्य से ओंकार पूर्वक शिवजी को स्नान करावे । दही मधु और ईख के रस से ।५३। तथा घृत से सम्पूर्ण कामना और हित के देने वाले शिवजी का पूजन करे तथा पवित्र द्रव्यों से प्रणय पूर्वक शिवजी का पूजन करे

।५४। पवित्र जलों को मन्त्र सहित पात्रों में ग्रहण करे तथा यथा योग्य श्वेत वस्त्र से जल को छाने ।५५। जब तक चन्दन न डाले, तब तक दूर न करे तथा श्रेष्ठ चावलों से शिवजी का पूजन करे ।५६।

कुशापामार्गकर्पूरजातिचंपकपाटलैः ।
करवीरैस्सितैश्चैव मल्लिका कमलोत्पलैः ॥५७
अपूर्वपुष्पैर्विविधैश्चन्दनाद्यैस्तथैव च ।
जलेन जलधाराश्च कल्पयेत्परमेश्वरे ॥५८
पात्रैश्च विविधैर्देवं स्नापयेच्च महेश्वरम् ।
मन्त्रपूर्वं प्रकर्तव्या पूजा सर्वफलप्रदा ॥५९
मन्त्राश्च तुभ्यं तांस्तात सर्वकामार्थ सिद्धये ।
प्रवक्ष्यामि समासेन सावधानतया शृणु ॥६०
पाठ्यमानेन मन्त्रेण तथा वाङ्मयकेन च ।
रुद्रेण नीलरुद्रेण सुशुक्लेन शुभेन च ॥६१
होतारेण तथा शीर्ष्णा शुभेनाथर्वणेन च ।
शांत्या वाथ पुनः शांत्या मारुणेनारुणेन च ॥६२
अर्थाभीष्टेन साम्ना च तथा देवव्रतेन । ६३

कुशा, चिरचिटा, कर्पूर जातिफल, चम्पक, पाटल, कनेर पुष्प, मल्लिका और कमल ।५७। तना अन्य अनेक अपूर्व पुष्प चन्दनादि से, पूजन कर शिवजी पर जल की धारा छोड़े ।५८। अनेक प्रकार के पात्रों में जल भरकर पूजन मंत्र पूर्वक की हुई पूजा सम्पूर्ण कामनाओं और फलों की देने वाली है ।५९। सभी कामनाओं की सिद्धि के निमित्त मैं उन मन्त्रों को संक्षेप में कहता हूँ, ध्यान पूर्वक श्रवण करो ।६०। पढ़ाये गये मन्त्र, वाङ्मय, कण्ठस्थ मंत्र, रुद्र सूक्त मंत्र, नीलसूक्त के मंत्र तथा शुक्ल यजुर्वेद के श्रेष्ठ मन्त्रों से ।६१। होतारम्० यजुमंत्र, अथर्वशीर्ष के मन्त्र, फिर शान्ति, आरुणि मन्त्र से ।६२। जो अपने को अनुकूल ही ऐसे अथर्व और साम मन्त्र तथा देव व्रत मन्त्र से ।६३।

रथांतरेण पुष्पेण सूक्तेन युक्तेन च ।
मृत्युंजयेन मन्त्रेण तथा पञ्चाक्षरेणाच ॥६४

जलधाराः सहस्रेन शतेनेकोत्तरेण वा ।
कर्तव्या वेदमार्गेण नामभिर्वाथ वा पुनः ।६५
ततश्चन्दनपुष्पादि रोपणीय शिवोपरि ।
दापयेत्प्रणवेनैव मुखबासादिकं तथा ।६६
ततः स्फटिकसंकाश देवं निष्कलमक्षयम् ।
कारणं सर्वलोकानां सर्वलोकमयं परम् ।६७
ब्रह्मेन्द्रोपेन्द्रविष्णवाद्यैरपि देवैरगोचरम् ।
वेदवित्भिर्हि वेदांते त्वगोचरमिति स्मृतम् ।६८
आदिमध्यान्तरहितं भेषज सर्वरोगिणाम् ।
शिवतत्वमिति ख्यातं शिवलिंगं व्यवस्थितम् ।६९
प्रणवेनैव मन्त्रेण पूजयेल्लिङ्गमूर्द्धनि ।
धूपैर्दीपैश्व नवेद्यैस्तांबूलैः सुन्दरैस्तथा ।७०

रथान्तर मन्त्र, पुष्पसूक्त के मन्त्र, मृत्युंजय मन्त्र तथा पंचाक्षर मंत्र से ।६४। एक हजार जलधारा से अथवा एक सौ एक जलधारा से वेद मन्त्रों से अथवा नाम मन्त्रोंसे भगवान् शिवजीके ऊपर अभिषेक करे।६५। फिर चन्दन, पुष्प आदि अर्पित करे तथा मुखवासादि के लिए सामग्री प्रणव से अर्पण करनी चाहिये ।६६। फिर स्फटिक मणि के समान देव कला रहित, क्षय रहित, सब लोकों के कारण एवं सर्वलोकमय परम स्वरूप ।६७। ब्रह्मा, इन्द्र, उपेन्द्र, विष्णु आदि को भी अगोचर तथा वेदान्तियों के वेदान्त में भी अगम्य ।६८। आदि, मध्य, अन्त से रहित, सब रोगों के लिए औषधि रूप, विख्यात शिवतत्व रूप शिव लिंग प्रतिष्ठित हैं ।६९। धूप, दीप, नैवेद्य, ताम्बूल शिव लिंग पर चढ़ाना चाहिए और चढ़ाते समय प्रत्येक बार प्रणव का उच्चारण करना चाहिए ।७०।

नीराजनेन रम्येण यथोक्तविधिना ततः ।
नमस्कारैः स्तवैश्चान्यैर्मंत्रैर्नानाविधैरपि ।७१
अर्घ्य दत्वा तु पुष्पाणि पादयोः सुविकीर्य च ।
प्रणिपत्य च देवेशमात्मनाऽऽधियेच्छिवम् ।७२

हस्ते गृहीत्वा पुष्पाणि समुत्थाय कृतांजलिः।
प्रार्थयेत्पुनरीशानं मन्त्रेणानेन शङ्करम् ।।७३
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मता ।
कृतं तदस्तु सफलं कृपया तव शंकरः ।।७४
पठित्वैवं च पुष्पाणि शिवोपरि मुदा न्यसेत् ।
ततः स्वस्त्ययनं कृत्वा ह्याशिषो विवधास्तथा ।।७५
मार्जनं तु ततः कार्यं शिवस्योपरि वै पुनः ।
नमस्कारं ततः क्षांति पुनराचमनाय च ।।७६
अघोच्चारणमुच्चार्य नमस्कारं प्रकल्पयेत् ।
प्रार्थयेच्च पुनस्तत्र सर्वभावसमन्वितः ।।७७

फिर यथाविधि नीराजन, नमस्कार और स्तुति करते हुए अनेक प्रकार के मन्त्रों का उच्चारण करे ।७१। अर्घ्य देकर शिवजी के चरणों में पुष्प अर्पण करे और प्रणाम पूर्वक उनका अर्पण करे ।७२। फिर हाथ में पुष्प ग्रहण कर उठे और अगले मन्त्र से ईशान देवता की आराधना करे ।७३। हे शंकर ! मैंने जो ज्ञान या अज्ञान से आपका पूजन किया है, वह सब आपकी कृपा से फलयुक्त हो ।७४। यह कहकर शिव जी के ऊपर पुष्प चढ़ावे, फिर स्वस्तिवाचन करके आशीर्वाद ग्रहण करे ।७५। फिर शिवजी के ऊपर मार्जन करे फिर नमस्कार कर अपराध क्षमा करावे और आचमन करावे ।७६। फिर अघोर मन्त्र का उच्चारण कर नमस्कार की कल्पना करे और सभी भावों से शिवजी की स्तुति प्रार्थना करे ।७७।

शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवेभवे ।
अन्यथा शरणं नास्ति त्वमेव शरणं मत ।।७८
इति संप्रार्थ्य देवेशं सर्वसिद्धिप्रदायकम् ।
पूजयेत्परया भक्त्या गलनादैर्विशेषतः ।।७९
नमस्कारं ततः कृत्वा परिवारगणैः सह ।
प्रहर्षमतुलं लब्ध्वा कार्यं कुर्याद्यथासुखम् ।।८०
एवं यः पूजयेन्नित्यं शिवभक्तिपरायणः ।

तस्य वै सकला सिद्धिर्जायते तु पदे पदे ।।८१
वाग्मी स जायते तस्य मनोभीष्टफलं ध्रुवम् ।
रोगं दुःखं च शोकं च ह्युद्वेग कृत्रिमं तथा ।।८२
कौटिल्यं च गरं चैव यद्यद्दुःखमुपस्थितम् ।
तद् दुःखं नाशयत्येव शिवः परः ।।८३
कल्याणं जायते तस्य शुक्लपक्षे यथा शशी ।
वर्द्धते सद्गुणस्तत्र ध्रुव शङ्कर पूजनात् ।।८४

मेरी शिवजी में भक्ति हो, निरन्तर शिवजी में भक्ति रहे । हे शिव! तुम ही मुझे शरण देने वाले हो, कोई दूसरा नहीं है ।७८। इस प्रकार सर्वसिद्धि प्रदायक देवों के भी ईश्वर शिवजी की प्रार्थना कर परम भक्ति पूर्वक कण्ठनाद के शब्दों द्वारा उन्हें प्रसन्न करे ।७९। फिर परिवारी जनों के सहित नमस्कार करता हुआ अत्यन्त प्रसन्नता को प्राप्त हो सुखदायक कार्य करे ।८०। जो मनुष्य शिव-भक्ति परायण होकर नित्य प्रति इस प्रकार पूजा करते हैं, उन्हें पद-पद में सिद्धि प्राप्त होती है ।८१। वह मनुष्य वाग्मी होता है और उसकी सभी इच्छाएँ फलदायक होती हैं । रोग, दुःख, शोक, उद्वेग, वनावट ।८२। कुटिलता तथा विष प्रयोग से उत्पन्न दुःखों को कल्याणकारी शिवजी नष्ट करते हैं ।८३। शुक्लपक्ष के चन्द्रमा के समान उसका कल्याण होता और शिवजी की पूजा करने से सद्गुणों की वृद्धि होती हैं ।८४।

## * लिंग पूजा विधान और स्तोत्र पाठ *

अतः परं प्रवक्ष्यामि पूजाविधिमनुत्तमम् ।
श्रूयतामृषयो देवयाः सर्वकामसुखावहम् ।।१
ब्राह्मे मुहूर्ते चोत्थाय संस्मरेत्सांवकं शिवम् ।
कुर्यात्तत्प्रार्थनां भक्त्या सांजलिर्नतमस्तकः ।।२
उत्तिष्ठोत्तिष्ट देवेश उत्तिष्ठ हृदयेशय ।
उत्तिष्ठ त्वमुमास्वामिन्ब्रह्माण्डे मङ्गलं कुरु ।।३
जानामि धर्मं न च मे प्रवृत्तर्जानाम्यधर्मं न च मे निवृत्तिः ।
त्वयामहादेवहृदि स्थितेन यथा नियुक्तोऽस्मितथाकरोमि ।।४

इत्युक्त्वा वचनं भक्त्या स्मृत्या च गुरुपादुके।
बहिर्गच्छेद्दक्षिणाशां त्यागार्थं मलमूत्रयोः ॥५
देहशुद्धिं ततः कृत्वा समृज्जलविशोधनैः।
हस्तौ पादौ च प्रक्षाल्य दंतधावनमाचरेत् ॥६
दिवानाथे त्वनुदिते कृत्वा वै दंतधावनम्।
मुखं षोडशवारं तु प्रक्षाल्यांजलिभस्तथा ॥७

ब्रह्माजी ने कहा—अब मैं श्रेष्ठ पूजन की विधि कहता हूं। हे देवताओ! यह सब सुख और कामनाओं को देने वाली है ॥१॥ ब्रह्म मुहूर्त में उठ कर शिव-पार्वती का स्मरण करे और हाथ जोड़कर नत मस्तक हो भक्ति पूर्वक उनकी प्रशंसा करे।२। हे देवेश! हे हृदयशाये! आप उठिए और ब्रह्माण्ड का कल्याण कीजिये।२। मैं धर्म का ज्ञाता हूँ, किन्तु उसमें मेरी प्रवृत्ति नहीं है। हे प्रभो! आप मेरे हृदय में स्थित होकर जैसी प्रेरणा करते हो, मैं उसी के अनुसार करता हूँ।४। इस प्रकार भक्ति-भाव पूर्ण वचन कहे और गुरु पादुकाओं का स्मरण कर, मल-मूत्र त्यागार्थ ग्राम से बाहर दक्षिण दिशा को गमन करे।५। फिर मिट्टी और जल से देह शुद्धि कर हाथ पाँव धोवे और दाँतुन करे।६। सूर्योदय से पूर्व दाँतुन करके सोलह कुल्ला करे।७।

यथावकाशं सुस्नायान्नद्यादिष्वथवा गृहे।
देशकालविरुद्धं न स्नानं कार्यं नरेण च।८
तैलाभ्यंगं च कुर्वीत वारान्दृष्ट्वा क्रमेण च।
नित्यमभ्यगके चैव वासितं वा न दूषितम् ॥९
श्राद्धे च ग्रहणे चैवोपवासे प्रतिपद्दिने।
अथवा सार्षपं तैलं न दुष्येद्ग्रहणं विना ॥१०
देशं कालं विचार्य्यैवं स्नानं कुर्याद्यथाविधि।
उत्तराभिमुखश्चैव प्राङ्मुखोऽप्यथवा पुनः ॥११
उच्छिष्टेनैव वस्त्रेण न स्नायात्स कदाचन।
शुद्धवस्त्रेण स स्नातात्तद्देवस्मरपूर्वकम् ॥१२
परधार्य्यं च नोच्छिष्टं रात्रौ च विधृतं च यत्।

तेन स्नानं तथा कार्यं क्षालितं च परित्यजेत् ॥१३
तर्पणं च ततः कार्यं देवर्षिपितृतृप्तिदम् ।
धोतवस्त्रं ततो धार्यं पुनराचमनं चरेद् ॥१४

यथा सुविधा नदी अथवा गृह में स्नान करे। स्नान देश काल को देखकर करना उचित है। वारों को देखकर क्रमानुसार तैल लगावे, नित्य तेल लगाने वाले की वास दूषित नहीं होती।९। श्राद्ध में, ग्रहण में, उपवास में, पड़वा में तेल न लगावे तो दोष नहीं है।१०। देश-काल को विचार कर, उत्तर या पूर्व की ओर मुख करके स्नान करे।११। उच्छिष्ट से स्नान न करे, अपने देवता का स्मरण करता हुआ शुद्ध वस्त्र से स्नान करे।१२। दूसरे का धारण किया हुआ वस्त्र उच्छिष्ट कहा है। परन्तु एक रात्रि का धारण किया हुआ वस्त्र उच्छिष्ट नहीं है, उससे स्नान करे और धोये हुए वस्त्र को छोड़ दे।१३। फिर देवताओं और ऋषियों की तृप्ति के लिए तर्पण करे और धुला हुआ वस्त्र धारण कर आचमन करे।१४।

शुचौ देशे ततो गत्वा गोमयाद्यपमार्जिते ।
आसनं च शुभं तत्र रचनीयं द्विजोत्तमाः ॥१५
शुद्धकाष्ठसमुत्पन्नं पूर्णं स्तरितमेव वा ।
चित्रासनं तथा कुर्यात्सर्मकार्वफलप्रदम् ॥१६
यथायोग्यं पुनर्ग्राह्यं मृगचर्मादिकं च यत् ।
तत्रोपविश्य कुर्वीत त्रिपुण्ड्रं भस्मवा सुधीः ॥१७
जपस्तपस्तथा दानं त्रिपुण्ड्रात्सफल भवेत् ।
अभावे भस्मनस्तत्र जलस्यादि प्रकीर्तितम् ॥१८
एवं कृत्वा त्रिपुण्ड्रं रुद्राक्षान्धारयेन्नरः ।
संपाद्य च स्वकं कर्म पुनराराधयेच्छिवम् ॥१९
पुनराचमनं कृत्वा त्रिवारं मन्त्रपूर्वकम् ।
एकं वाथ प्रकुर्याच्च गंगाविन्दुरिति ब्रुवन् ॥२०
अन्नोदकं तथा तत्र शिवपूजार्थमाहरेत् ।
अन्यद्वस्तु यत्किंचिद्यथाशक्ति समीपगम् ॥२१

फिर गोबर से लिपे हुए पवित्र स्थान में सुन्दर आसन कल्पित करे ।१५। वह शुद्ध काष्ठ का और चिकना हो, ऐसा चित्रासन सर्व कामना और फल का देने वाला बनावे ।१६। फिर मृग चर्म आदि को ग्रहण कर उस पर बैठे और भस्म से त्रिपुण्ड धारण करे ।१७। त्रिपुण्ड धारण से जप, तप, दान सब सफल होता है, यदि भस्म न हो तो जल से ही त्रिपुण्ड्र लगाना चाहिए ।१८। इस प्रकार त्रिपुण्ड धारण के पश्चात् रुद्राक्ष धारण करे और सम्पादन करता हुआ, शिवजी की आराधना करे ।१९। फिर मन्त्र पूर्वक तीन आचमन करके गंगा विष्णु का उच्चारण करता हुआ एक बार तिलक लगावे ।२०। फिर शिवजी का पूजन करने के लिये यथाशक्ति अन्न, जल अथवा अन्य जो वस्तु हो निकट लावे ।२१।

कृत्वा स्थैर्यं च तत्रैव धैर्यमास्थाय वै पुनः ।
अर्धपात्रं तथा चैकं जलगंधाक्षतैर्युतम् ।।२२
दक्षिणांसे तथा स्थाप्यनुपचारस्य क्लृप्तये ।
गुरोश्च स्मरणं कृत्वा तदनुज्ञामवाप्य च ।।२३
संकल्पं विधिवत्कृत्वा कामनां न नियुज्य वै ।
पूजयेत्परया भक्त्या शिवं सपरिवारकम् ।।२४
मुद्रामेकां प्रदर्श्यैव पूजयेद्विघ्नहारकम् ।
सिंधुरादिपार्थैश्च सिद्धिबुद्धिसमन्वितम् ।।२५
लक्षलाभयुतं तत्र पूजयित्वा नमेत्पुनः ।
चतुर्थ्यंतैर्नामपदैर्नमोन्तैः प्रणवादिभिः ।।२६
क्षमाप्यैनं तदा देवं भ्रात्रा चैव समन्वितम् ।
पूजयेत्परया भक्त्या नमस्कुर्यात्पुनः पुनः ।।२७
द्वारपालं सदा द्वारि तिष्ठंतं च महोदरम् ।
पूजयित्वा ततः पश्चात्पूजयेद्गिरिजां सतीम् ।।२८

यह करता हुआ धैर्य पूर्वक वहाँ बैठे और फिर गन्ध, जल, अक्षत से युक्त अर्घ्य पात्र ग्रहण करे ।२२। फिर उपचार की पूर्ति के हेतु अपने दक्षिण ओर उसे स्थापित कर गुरु का स्मरण करे और उनकी

आज्ञा प्राप्त करके।२३। विधिवत् संकल्प करे और उसमें अपनी कामना व्यक्त करता हुआ परम भक्तिभाव से सपरिवार शिवजी पूजा करे।१४। फिर एक मुद्रा भेंट की उपस्थित कर विघ्नेश्वर की पूजा करे। इनकी पूजा सिद्धि बुद्धि से करता हुआ सिन्दूर आदि पदार्थ अर्पण करे।२५। लक्ष लाभ युक्त पूजन करके नमस्कार करे और प्रणाम करे तो प्रणव सहित चतुर्थी विभक्ति नाम से लगाकर अन्त में नमः लगावे।२६। फिर उनसे क्षमा कराकर स्कन्ध-भ्राता सहित परम भक्ति पूर्वक पूजा कर बारम्बार प्रणाम करे।२७। शिवजी के द्वार पर सदा स्थित रहने वाले सहोदर नामक द्वारपाल की पूजा कर फिर सती पार्वती जी का पूजन करे।२८।

चंदनैः कुंकुमैश्चैव धूपैर्दीपैरनेकशः।
नैवेद्यैर्विविधैश्चैव पूजयित्वा ततः शिवम् ॥२९
नमस्कृत्यपुनस्तत्र गच्छेच्च शिवसान्निधौ।
यदि गेहे पार्थिवीं वा राजती तथा ॥३०
धातुजन्यां तथैवान्यां पारदां वा प्रकल्पयेत्।
नमस्कृत्य पुनस्तां च पूजयेद्भक्तितत्परः ॥३१
तस्यां तु पूजितायां वै सब स्युः पूजितास्तथा।
स्थापयेच्च मृदा लिंगं विधाय विधिपूर्वकम् ॥३२
कर्तव्यं सर्वथा तत्र नियमात्स्वगृहे स्थितैः।
प्राणप्रतिष्ठां कुर्वीत भूतशुद्धिं विधाय च ॥३३
दिक्पालान्पूजयेत्तत्र स्थापयित्वा शिवालये।
गृहे शिवः सदा पूज्यो मूलमन्त्राभियोगतः ॥३४
तत्र तु द्वारपालानां नियमो नास्ति सर्वथा।
गृहे लिंग च मत्पूज्यं तस्मिन्सर्वं प्रतिष्ठितम् ॥३५

चन्दन, केसर, धूप, दीपक, और नैवेद्य के द्वारा शिवजी का पूजन करे।२९। फिर नमस्कार कर उनके निकट जाकर घर में स्वर्ण या रजत जो कुछ पार्थिव धातु हो।३०। अथवा अन्य धातु या पारे की मूर्ति को नमस्कार कर भक्ति-भाव से तन्मयता पूर्वक पूजन करे।३१। उसको

पूजने से सभी का पूजन हो जाता है। मृत्तिका का लिंग विधि पूर्वक स्थापित करे ।३२। अपने घर में रहकर नियम पालन करे और भूत शुद्धि करके भगवान् की प्राण प्रतिष्ठा करे ।३३। शिवालय में प्रतिष्ठित कर दिक्पालों को पूजे तथा घर में भी मूल मन्त्र से शिवजी की अर्चना ।३४। घर में द्वारपाल के पूजन का नियम नहीं है, वहाँ जो लिंग पूजा जाता है उसी में सब प्रतिष्ठित हैं ।३५।

पूजकाले च सांगं वै परिवारेण संयुतम् ।
आवाह्य पूजयेद्देवं नियमोऽत्र न विद्यते ॥३६
शिवस्य संनिधिं कृत्वा स्वसानं परिकल्पयेत् ।
उदङ् मुखस्तदा स्थित्वा पुनराचमनं चरेत् ॥३७
प्रक्ष्याल्य हस्तौपश्चाद्वै प्राणायाम् प्रकल्पयेत् ।
मूलमन्त्रेण तत्रैव दशावर्तं नयेन्नरः ॥३८
पञ्च मुद्राः प्रकर्तव्याः पूजाऽवश्यं करेप्सिताः ।
एता मुद्राः प्रदर्श्यैव चरेत्पूजाविधिं नरः ॥३९
दीपं कृत्वा तदा तत्र नमस्कारं गुरोरथ ।
बद्ध्वा पद्मासनं तत्र भद्रासनमथापि वा ॥४०
उत्तानासनकं कृत्वा पर्यंका सनकं तथा ।
यथासुखं तथा स्थित्वा प्रयोगं पुनरेव च ॥४१
कृत्वा पूजां पुरा जातां वट्टकेनैव तारयेत् ।
यदि वा स्वयमेवेह गृहे न नियमोऽस्ति च ॥४२

पूजन के समय पूरे परिवार सहित आवाहन और देव-पूजन करे ।३६। शिवजी के निकट ही अपना आसन कल्पित करे और उत्तराभिमुख होकर आचमन करे ।३७। फिर हाथ धोकर प्राणायाम मूल-मन्त्र से दश बार करे ।३८। फिर पाँचों मुद्रा दिखावे, क्योंकि पूजन हाथ से ही स्थित होता है, इन मुद्राओं को देखकर ही पूजन कार्य सम्पन्न करने का विधान है ।३९। फिर दीपक करके गुरु को नमस्कार करे और पद्मासन या भद्रासन से स्थित होकर ।४०। उत्तनासन अथवा पर्यंकासन करके सुख-पूर्वक बैठे ।४१। पहिले के समान पूजन करके टबक से तारण

करके टबक से तारण करें और घर में ही पूजन हो तो इसका नियम नहीं हैं ।४२।

पश्चाच्चैवार्घपात्रेण क्षालयेल्लिंगमुत्तमम् ।
अनन्यमानसो भूत्वा पूजाद्रव्यं निधाय च ।।४३
पश्चाच्चावाहयेद्देवं मन्त्रेणानेन वै नरः ।
कैलासशिखरस्थं च पार्वतीपतिमुत्तमम् ।।४४
यथोक्तरूपिणं शंभु निर्गुणं गुणरूपिणम् ।
पञ्चवक्त्रं दशभुज त्रिनेत्रं वृषभध्वजम् ।।४५
कर्पूरगौरं दिव्यांगं चन्द्रमौलिं कपर्दिनम् ।
व्याघ्रचर्मोत्तरीयं च गजचर्माम्बरं शुभम् ।।४६
वासुक्यादिपरीतांगं पिनाकाद्यायुधान्वितम् ।
सिद्धयोऽष्टौ च यस्याग्रे नृत्यंतीह निरंतरम् ।।४७
जयजयेति शब्दैश्च सेवितं भक्तपुंजकैः ।
तेजसा दुःसहेनैव दुर्लक्ष्यं देवसेवितम् ।।४८
शरण्यं सर्वसत्वानां प्रसन्नमुखपंकजम् ।
वेदैः शास्त्रैर्यथा गीतं विष्णुब्रह्मनुतं सदा ।।४९

फिर परसोतम शिवलिंग को अर्घ्यपात में स्नान करावे और किसी दूसरी ओर मन न रखकर, पूजन-द्रव्य का विधान करे ।४३। फिर मन्त्र से आह्वान करे। कैलाश शिखर पर स्थित उमापति ।४४। निर्गुण-सगुण यथोक्त रूप शिव पाँच मुख, दश भुजा तीन नेत्र, वृषभध्वज ।४५। कर्पूर जैसे गोरांग, मस्तक पर चन्द्रमा तथा जटाजूट से शोभायमान, व्याघ्र चर्म का उत्तरीय धारण एवं श्रेष्ठ गजचर्म धारण किये ।४६। वासु की आदि सर्पों को कण्ठ में लपेटे, हाथ में पिनाक आदि आयुध धारण किये हैं, उनके आगे अष्ट सिद्धि निरन्तर नृत्य करती हैं ।४७। जिनके चारों ओर भक्त समूह जय-जयकार कर रहे हैं जो अपने दुःसह तेज के कारण देवताओं से सेवित एवं जुर्लक्ष्य बने हैं, ।४८। जो सब प्राणियों के शरणदाता, प्रसन्न मुखकमल से युक्त, वेद शास्त्रों के गान तथा ब्रह्मा, विष्णु द्वारा भी स्तुत्य हैं ।४९।

